# ॐ वेङ्कटेशतापिन्युपनिषत्प्रारभ्यते ॥

## तत्रपूर्वतापिनी–

ॐ भद्रं कर्णेभिः ॐ शान्तिः शान्तिः शान्तिः ॥ ॥हरिः ॐ ॥ जनको ह वै नाम राजा वैदेहो राज्ये अमात्यादीन् भ्रातॄंश्च निधापयित्वेदमशाश्वतं मन्यमानः शरीरं वैराग्यमुपेतोऽरण्यं निर्जगाम। स तत्र परमं तप आस्थायादित्यमुदीक्षमाण ऊर्द्ध्वबाहुस्तिष्ठत्यंते सहस्रस्य मुनिरन्तिकमाजगामाग्निरिवाऽधूमकस्तेजसा निर्दहन्निव सदा तेषां सम्मत आत्मविच्छाकायन्योऽब्रवीदुत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति राजानम् । स तस्मै नमस्कृत्योवाच भगवन्नाहमात्मवित्त्वं तत्त्वविच्छृणुमो वयं त्वत्तः स्वात्मवेदनसाधनं प्रत्यक्षं प्रत्यक्षसिद्धिदमित्युदाहृतंद्वृत्तं पुरस्तादशक्यं कथं पृच्छस्येतत्प्रश्नं वैदेहान्या–न्कामान्वृणीष्वेति ॥ शाकायन्यस्यतदनुशिरसाऽस्य चरणावभिमृश्यमानो राजेमां गाथां जगाद ॥ इत्याथर्वणे मन्त्ररहस्ये श्रीवेङ्कटेशपूर्वतापनीयेप्रथमः प्रपाठकः ॥१॥ भगवन्नस्थिचर्मस्नायुरोमनाडीमांसभेदोमज्जाशुक्रशोणितश्लेष्माऽसृक्पूरिते विण्मूत्रवातपित्तसंघाते दुर्गंधे निस्सारेऽस्मिञ्छरीरे किं कामोपभोगैः ॥ २ ॥ कामक्रोधलोभमोहमदमात्सर्यविषदष्टवियोगानिष्टसम्प्रयोगक्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिभूतेऽस्मिञ्छरीरे किं कामोपभोगैः ॥ ३ ॥ सर्वं चेदं क्षयिष्णु पश्यामो यथेमे दंशमशकादयस्तृणवनस्था उभयंप्रध्वंसिनः ॥४॥ अथ किमेतैर्वा परे महाधनुर्धराश्चक्रवर्तिनः केचित्प्रद्युम्नभूतिद्युम्नेन्द्रद्युम्नाः कुवलयाश्वयौवनाश्ववध्र्याश्वाश्वपतिशशिबिन्दुहरिश्चन्द्राम्बरीषाः अथोनुन्मत्ताः स्वयातिययात्यनरण्योग्रसेनादयो मरुद्भरतप्रभृतयो राजानो मिषन्तो बन्धुवर्गं महतीं श्रियं त्यक्त्वा अस्माल्लोकादमुं प्रयाताइति ॥ ५ ॥ अथ किमेतैर्वा परे अन्यैर्गन्धर्वाऽप्सरोयक्षराक्षसभूतगणपिशाचोरगग्रहादीनां निरोधनं पश्यामः ॥ ६ ॥ अथ किमेतैर्वा शोषणं महार्णवानां शिखरिणां प्रपतनं ध्रुवस्य चलितं पातः कल्पकपादपानां निमज्जनं पृथिव्याः स्थानादपसरणं सुराणामित्येतद्विधेस्मिन्संसारे किं कामोपभोगैः ॥ ७ ॥ अथैर्भ्वेवासक्तस्यासकृदुपावर्तनं दृश्यत इत्युद्धर्तुमर्हस्यन्धोदपानस्थभेक इवाहमस्मिन्संसारे भगवंस्त्वं नो गतिस्त्वं नोगतिः ॥ ८ ॥ अथ जन्मजरामरणदुःखप्रधानेस्मिन्संसारे भगवद्भक्तियोगं विना नान्यत्परायणमित्यतो वेङ्कटेशस्य सर्वसुलभस्य सर्वप्रत्यक्षानितरलभ्यस्यास्य, संकल्पवशाज्जातप्रपञ्चे यत्सारभूतं तदेव ते प्रदर्शयिष्ये वैदेह शृणुष्वैतद्भागवतेनैव चेत्यक्रुयेति ॥ ९ ॥ इतिद्वितीयः प्रपाठकः ॥ २ ॥ अथ भगवाञ्छाकायन्यस्त्वब्रवीद्राजन् जनक वैदेह मैथिलवंशध्वजशीर्ष आत्मज्ञः कृतकृत्यस्त्वं ब्रह्मविच्छ्रेष्ठ इति विश्रुतो भवसीत्ययं वा खलु पंथास्ते नो भगवान् पुरा समुपदिदेश[illegible] द्रक्ष्याम्येतत्सर्वं विदितं भवति ॥ १ ॥ अथ य एषोत्यवर्धभेनेत्यूर्ध्वमुत्क्रांतो व्यथमानो

तस्तस्य तमः प्रणुदत्येष आत्मेत्याह भगवान् ॥ २ ॥ अथ य एष संप्रेत्यास्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतत्परायणमेत द्ब्रह्मेति ॥ ३ ॥ अथ खल्वियं ब्रह्मविद्या सर्वा सर्वोपनिषद्विद्या राजन्नस्माकं भगवता मैत्रेयेण व्याख्याताहं ते कथयिष्यामि धावहपाप्मानस्तिग्मतेजस ऊर्द्ध्वरेतसो वालखिल्या वैखानसाश्चेति श्रूयंते । अथ ते प्रजापतिमब्रुवञ्छकटमिवाचेतनमिदं शरीरं तस्यैष खल्वीदृशो महिमातींद्रियेण येन तद्विधमेतच्चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य को भगवन्निदमस्माकमादौ ब्रूहीति त मुवाच ॥ ४ ॥ एतत्खलु वा व सर्ववरिष्ठः श्रूयते उत्तमपुरुषः ॥ स एष शुद्धः पूतः शान्तो प्राणोऽनिशमात्मा नो ज्ञेयः शाश्वतश्चस्थिर ईशः स्वतंत्रः स्वमहिम्नि तिष्ठत्यनेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्येति तदधीनोयमात्मा पराधीनचेतनोऽनादिकर्मबद्धः पुरुषसंज्ञो बुद्धिपूर्वमिहैवावर्ततेंशेन सुप्तस्येव बुद्धिपूर्वं विबोधयत्यग्रे । योऽह खलु वा वांशाशितामात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिंगः प्रजापतिर्विश्वोक्षरस्तेन चेतनेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्येति । ते होचुर्भगवन्नीदृशस्य कथमंशीभूतस्यानुरूपस्यात्मनः पराधीनचैतन्यत्वेनतस्य तु स्वाधीनचैतन्यत्वेन च वर्तनमिति ॥ ५ ॥ प्रजापतिर्वा एकोऽग्रे तिष्ठन्त्स नारभतैकः स आत्मानमभिध्यायन् बह्वीः प्रजा असृजत । अस्मै वा प्रबुद्ध अप्राणः स्थाणुरिव तिष्ठमाना अपश्यन्त्स आरभ तान्यथैतासां प्रतिबोधनायाऽभ्यन्तरं विशामीति स चतुर्भुजः करवरदरारिपो वेङ्कटेशचित्प्रभारूपो दहरवैकुंठरथभूतसंघः स्वस्थःस्वतन्त्रः पुनः स वायुमिवात्मानं कृत्वाभ्यन्तरं प्राविशत्सा एको नाशकत्सपंचधाऽऽत्मानं प्रविभज्योद्यतो यः प्राणोपानस्समानोव्यान उदान एवैताः शिरा अनुव्याप्ता एष वा व स व्यानः ॥ ६ ॥ अथोपांशुरन्तर्याममभिभवत्यंन्तर्यामी उपांशुमनयोरन्तराले चौष्ण्यंप्रास्रवद्यथौष्ण्यंपुरुषोदयः पुरुषस्सोग्निर्वैश्वानरो सोन्यत्राप्युक्तमयमग्निर्वैश्वानरो योयमंतः पुरुषो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति ॥ ७ ॥ यदेतत्कर्णौ च पिधाय शृणोति च यद क्रमिष्यन् भवति नैनं घोषं तं शृणोति स एष पञ्चधात्मानं विभज्य निहितो गुहायां मनोमयोऽशरीरो भारूपः सत्यसंकल्प आत्मा दिव्यशरीरः श्रीवेङ्कटेश इति ॥ ८ ॥ स वा एषो स्य हृदन्तरे तिष्ठन्नकृतार्थो मन्यते यत्वोदनमश्नातीत्येथमानि भित्वौदिनः पंचभीरश्मिभिर्विषयानत्तीति बुद्धींद्रियाणि यानीमान्येतान्यस्यरश्मयः कर्मेंद्रियाण्यस्य हया रथः शरीरं मनोभियंता प्रकृतिमयोस्य प्रचोदनेन खल्वीरितं परिभ्रमतीदं शरीरंचेतनवत्प्रतिष्ठितं प्रचोदयिता वैषोस्येति ॥ ९ ॥ स वा यो यं हृद्यंतः पुरुषो भगवान् वेंकटेशस्तुरीयो वासुदेवात्मा स एष दहराकाशमादित्यरूपः रिमित्थं रथीकृत्य स्वयं रथिको भूत्वेवमेव पिण्डब्रह्माण्डरथरथिको बभूव ॥ १० ॥ स ष आत्मेहात्मनिवसितानि तैः कर्मफलैः परिभूयमान इव शरीरे वा विचरत्यव्यापकत्वात्सूक्ष्मत्वादग्राह्यत्वान्निर्ममत्वाचनावस्थाकर्ताकर्तेहनपश्यः ॥ ११ ॥ स वा एष शुद्धःस्थिरो

चलसालेपोऽयग्रो प्रेक्षकवदस्थितः स्वस्थश्चरितभूगुणमयेन पटेननात्मानमंतर्धायावस्थित इत्यवास्थितः ॥ १२ ॥ श्रीवेङ्कटेशपूर्वतापिन्यां तृतीयः प्रपाठकः ॥ ३ ॥ तेहोचुर्भगवन् यद्येवमात्मनोमहिमानंसूचयसि तर्ह्ययंवावजीवात्माकथं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यते अवाचीवोर्ध्वावागतिर्द्वंद्वैरभिभूयमानः परिभ्रमतीत्यस्योपव्याख्यानम् । पंचतन्मात्राणिभूतशब्देनोच्यंते । पंचमहाभूतानिभूतशब्देनोच्यंते । अथतेषांयः समुदायस्तच्छरीरमित्युक्तमथयो हखलुवात्र अशरीरइत्युक्तः सभूतात्मेत्युक्तोथास्तिततस्यात्मबिंदुरिवपुष्कर इति ॥ १ ॥ स वा एषोऽभिभूतः परकृतैर्गुणैरित्यंशाभिभूतत्वान्संमूढः प्रयातः संमूढत्वादात्मानं प्रभुं भगवंतं कारयितारं नापश्यत् । गुणौघैस्तप्यमानः कलुषीकृतहृच्चित्तश्चंचलोलुप्यमानःस स्पृहो व्यग्रश्चाभिमानित्वं प्रयात इत्याह सोहं ममेदमित्येवं मन्यमानो निबद्धोह्यात्मनात्मानं जानन्नेव खचरः कृतस्वानुचरैः पत्रैरभिभूयमानः परिभ्रमतीति ॥ २ ॥ अथाप्यन्यत्राप्युक्तं यथालोहपिण्डस्त्वग्निसंपर्काल्लोहमयो लोहगतप्रहारादीननुभवतीति तद्वद्देहेंद्रियभूतगुणैरयं पुरुषोभिभूयत इव ॥ ३ ॥ अथाप्यन्यत्राप्युक्तं शरीरमिदं मैथुनादेवोद्भूतं संविद्व्यपेतं निरय एव मूत्रद्वारेण निष्कान्तमस्थिभिश्चितं मांसेनावलिप्तं चर्मणावबद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्चमलैर्बहुभिः परिपूर्णं कोशैरिव निर्मितम् ॥ ४ ॥ अथान्यत्राप्युक्तं संमोहो भयं विषादो निद्रा तंद्राव्रणो जरा शोकः क्षुत्पिपासा कार्पण्यं क्रोधो नास्तिक्यमज्ञानंमात्सर्यं वै कारुण्यं मूढत्वं निर्व्रीडत्वंनिकृतत्वमुद्धतत्वमसमत्वमिति तामसान्वितस्तृष्णा स्नेहो रागो लोभोहिंसारतिर्दृष्टिव्यापृतत्वमित्यस्थिरत्वं चलत्वं व्यग्रत्वं जिहीर्षार्थोपार्जनं मित्रानुग्रहणं परिग्रहावलंबोनिष्टेष्विंद्रियार्थेषु द्विष्टिरिष्टेष्विंद्रियार्थेष्वभिषंग इति राजसान्वितैः परिपूर्ण एतैरभिभूत इत्ययं भूतजीवात्मा । तस्मान्नानारूपाण्याप्नोत्याप्नोतीति॥५॥अथान्यत्राप्युक्तं महानदीषूर्मय इवानिवर्तकमन्यत्पुराकृतं समुद्रवेलेव दुर्निवार्यमस्य मृत्योरागमनं सदसत्फलमयैः पाशैः पंगुरिव बंधनं बंधनस्थस्यैवास्वातंत्र्यं यमविषयस्थस्यैव बहुतरावस्थंमादिरोन्मत्त इव मोदमदिरोन्मत्तं पाप्मना गृहीत इव भ्राम्यमाणं महोरगदष्टइवविपदष्टं महांधकार इव रागांधम् इंद्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शनं कदलीगर्भइवासारं नटइव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोमयमित्यथोक्तं-शब्दस्पर्शादयोह्यर्था अनर्था इव ते स्थिताः ॥ एषांसक्तस्तुभूतात्मा न स्मरेच्च परं पदमिति ॥ ६ ॥ ते ह खलु वा ऊर्ध्वरेतसोतिविस्मितमभिसमेत्योचुर्भगवन्नमस्ते त्वं नः शाधि त्वमस्माकं गतिरन्या न विद्यतेस्यकोविदुर्भूतजीवात्मनो येनेदं हित्वा सायुज्यमुपैति तं होवाचेति ॥ ७ ॥ अयं वा व खल्वस्य प्रतिनिधिर्भूतात्मनोयदविद्याधिगमः स्वस्यानुचरणं स्वाश्रमेष्वेवानुक्रमणं स्वधर्म एव सर्वं धत्ते विशाखेव नराणां तेनोर्ध्वभाग्भवत्यथाधःपतत्येष स्वधर्मोपदेवेषु स्वधर्मातिक्रमेण नासमभवदाश्रमेष्वेवावस्थितस्तपस्वी प्र- एतदप्युक्तं नो तस्यात्मज्ञानेऽधिगमः ' कर्मबुद्धिर्वै हर्यहम् ॥ तपसाप्राप्यते सत्त्वं

प्यते मनः ॥ मनसा प्राप्यते ह्यात्मा आत्मना न निवर्तत इति ॥८॥ अथाह भृशविस्मितास्ते ह्यूर्ध्व रेतसः समुत्थाय पादयोः पितामहस्य दंडवत्पुनः पतन्ति॥ पुनरुत्पतन्तस्तिष्ठन्तोभगवन्कृपालुस्त्व मसि सर्वज्ञो हि जगतां धातासि पितासि वयं किञ्चिज्ज्ञाः प्रमाथिनो बहुभव्यपराङ्मुखाः संसार भीता ह्यस्माकं सर्वेषां च यत्सारतरं तत्त्वज्ञानं सूक्ष्मोपदेशेनैवानायासेन मननाय दृढं भवति यदनु ष्ठानमात्रेण वैकस्मिन्नेव जन्मनि परा गतिर्भवति तद्ब्रूहीत्यथ वा शिष्यानुजिघृक्षुः परमसाधनं परम सुलभं परमश्रेष्ठं परमरहस्यं प्रतिज्ञां चकार। तेनते कृतकृत्याअभूवन्॥तज्ज्ञानादेव पूर्वे वर्तमाना भवि ष्यन्तश्च मुक्ता मुच्यमाना मोक्ष्यन्ते च। तदेव रोपणाम्यनेनैव विमोक्षाय भवत्यस्मिन्निष्ठा परा देहे गेहे राज्ये वा सुखासीनो विमना न क्लिश्यतीति तद्वक्तुमुपक्रमते ॥ ९ ॥ इति वेङ्कटेशपूर्व तापिन्युपनिषदि चतुर्थः प्रपाठकः ॥ ४ ॥ ॥ तमो वा इदमेक आसीत्तत्पश्चात्परेणोदितः ॥ विषमत्वंप्रयात्येतद्वैरजसो रूपं तेजः खल्वीरितं विषमंतं प्रयात्येतद्वै सत्त्वस्य रूपं तत्सत्त्वमेवेरितं रजस्तापाद्रवत्सोंशोयं यश्चैतन्यमात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिंगः प्रजापतिस्त स्य प्रोक्तोस्यास्तनवे बह्मरुद्रौ विष्णुरित्यथयोहखलु वा वास्य राजसांशोल्लासेनयोयं विष्णुः सवा एकस्त्रिधा भूत्वा ४३७, ९१००, १००० दशधा अपरिमितभूतोद्भूतत्त्वाद्भूतेषु चरति प्रतिष्ठि तः स देवानामधिपतिर्बभूव यसावात्मांतर्बहिश्चांतर्बहिश्च ॥ १ ॥ यो ह वै भगवानात्मायथांतर्बहिर्व्या प्तः प्रसिद्धस्तथा स्वरूपं परमं द्वेधा चकार विष्णुर्वेंकटेशाख्यं नारायणाख्यमित्यथैतन्नारायणाख्य स्य वैकुंठंनित्यनिवासं चकार। वेङ्कटेशाख्यस्य तु वैकुंठाचलं नित्यनिवासम्। यथा बिंबाद्विवोद्भूतं बिंबं तद्वन्नारायणाद्वेंकटेशो वैकुंठयोर्वेंकटाचलस्तदनु वेङ्कटाचलनामकं संस्थाने वेङ्कटेशोयमधि ष्ठाय सकलदृग्गोचरत्वेन सकलतारणाय स्वयंव्यक्तरूपी वक्षःस्थितरमाख्यं मंगलं रूपमादाय स्वा मिपुष्करिणीतीरे संन्निहितः समास्ते॥अत्रायं श्लोको भवति-मायावीपरमानंदस्त्यक्त्वावैकुंठमुत्तमम्॥ स्वामिपुष्करिणीतीरे रमयासह मोदत इति ॥ स्वयं भगवानद्यापि परिदृश्यतेऽद्यापि परिदृश्यते ॥ ततस्सर्वसुलभं तदुपासनं यत्र कुत्रवा स्थितस्य सकृद्दर्शनमात्रेण सर्वज्ञो भक्तस्तदुपासनयैव मुच्य त एवेति तत्सर्वं यथाविभवविस्तरं समासेनैव वक्ष्यामीति भगवान् प्रजापतिः ॥ २ ॥ श्रुत्वेद उर्ध्वरेतसो भगवान्भक्तानुजिघृक्षया यथायोग्यमंतर्याम्यरूपाण्यदधत्तदनु तत्स्व विशिष्टाधिक रणमेवोपासनाविषयमेवेति मन्वानः पुनर्दिव्यास्तेर्द्धमानुषमयं व्यक्तिभेदभिन्ना वा अवतारसह स्राण्यदधत्तेभ्योभिमुख्यं वेंकटेशाख्यं भगवद्वपुरित्यत एवागम्योप्रतर्क्यश्च तन्महिमेत्यत्र संप्रदाय ..ो मुनय एवमामनंत्येवं खलु व्यवसायिनीरागिणांसांख्यो योगो रागिणां कर्मयोगो रागिणि रागि भक्तियोग एवं परमतरणोपायः । भक्तियोगिनां भगवदवताररूपगुणकर्मनामजालं विना ..मनैव संगच्छतइति । तत्राद्यावताररूपा अप्रत्यक्षातदुपासनातीवगहनेत्यथ दयालुः भगवान ..टेकोटिश्रेष्ठंसर्वसिद्धिदमित्युक्त्वोपरराम । तदथोर्ध्वरेतसोऽभितः किमयं तूष्णीमुपा

सेति तस्य पदमभिमृश्यमाना श्रीवेङ्कटेश्वरस्य रहस्यमुपासनायाः प्रकारं सर्वमान्यमुपदिशान्तं प्रार्थयमाना अभवंस्तदनुपूर्वकृतां श्रीवेङ्कटेश्वरस्याज्ञां स्मरन् भक्तेभ्योवश्यमनुग्रहयोग्यमेवेति वालखिल्यान्प्रतिभूय एव तपसा ब्रह्मचर्येण श्रत्वायावत्संवत्सरं वत्सरानंतरं रहस्यत्रयं सर्वं ह वो वक्ष्यामीति प्रजापतिः प्रतिज्ञां चकार॥ भद्रं कर्णेभिः...आयुः ॥ हरि ॐ ॥ इतिश्रीवेङ्कटेशपूर्वतापिन्युपनिषदि चतुर्थः प्रपाठकः ॥ ५ ॥ इति श्रीवेङ्कटेशपूर्वतापिन्युपनिषत्समाप्ता ॥

## तत्रोत्तरतापिन्युपनिषत्-

ॐ भद्रंकर्णेभिरिति शान्तिः ३॥ यदाहुः-स्वस्तिनइंद्रो...बृहस्पतिर्दधातु। प्रजापतिरुवाचोद्धेरे तसः ॐ आपोवा इदमासन् सलिलमेव सप्रजापतिरेकः पुष्करपर्णे समभवद्भगवतोस्यांतर्मनसि काम स्समवर्तत इदं सृजेयमिति।सतपोतप्यत।सतपस्तप्त्वा सएतं संसृष्टं वेङ्कटेशेति चतुरक्षरंसमलभत।ततः कालेन आदितः श्रीबीजं च खादेवालभत।एवं पंचाक्षरं स्मरणीयमभवत्। तं पंचाक्षरं मंत्रं स्मरन् स्थित्वा ततः कालेन तन्मंत्रमहिम्ना सहस्रशीर्षादिलक्षितं पुरुषं प्रत्यक्षीचकार। तथा च यजूंषि सहस्रशीर्षापुरुष इत्यादीनि षोडश प्रसिद्धानि। ततो ब्रह्मा बिभयांचकार अलौकिकमप्रतिमं रूपं वीक्ष्य। सतमाश्वासयत्। ततो भगवान् तस्य दिव्यदृष्टिं प्रददौ च। ततो ब्रह्मा कस्त्वं कोहमित्युवाच। नारायणः क एवाहं कस्त्वमेवासीति। तस्माद्भगवतो नारायणस्य क इति मुख्यनाम तथैव क इति ब्रह्मणश्च नामासीत्। अतः क इति नारायणकृतं ब्रह्मनाम जानीयात्। योजानीते सोश्वमेधफलमाप्नोति।अथ नारायणो ब्रह्मणेनाभिपद्मगताय वेङ्कटेशाख्यं रूपं दर्शयामास।इदमतिरहस्यं गोप्याद्गोप्यतरम् एतत्परं नवाक्षरं "ॐ नमःश्रीविङ्कटेशाय"इत्युपादिशत्। तज्जपादुद्बुद्धतत्त्वः स्रष्टुमुपाक्रामत्। भगवान्किमिदमादौ चतुरक्षरमनु पंचाक्षरं तदनु नवाक्षरं मंत्रंपरमुपदिष्टवानिति। सोब्रवीत्। ब्रह्मा त्वत्तः सृष्टिकामोहमयत्वं तद्विधानेनानुष्ठानं विना तस्य न शक्नोषि किंबहुना अहमपि। मम तद्रूपानुसंधानं प्रेक्षितुंनशक्नुयाइति। अथ विस्मितो महाप्रसादइति ब्रह्मा प्राणमत्।तमनु ततःशिरःस्पृष्ट्वा हृदये वेङ्कटेशाख्यं दिव्यं रूपं चतुर्भुजं वक्षःस्थलस्थितादिव्यमंगलदीप्यमानं कटिवरदशंखचक्रकरचतुष्टयं पीतांबरं नीलमेघश्याममप्रतर्क्यप्रत्यंगशोभाभिरामं ध्यानगोचरं कारयित्वा सुरष्टाक्षरमहामंत्रमुपादिदेश।तस्य ब्रह्माऋषिः गायत्री छंदः इति सकलचराचरनियामिका वेङ्कटे[illegible] पूर्वोक्तमेव ध्यानमिति। आदौ प्रणवं दक्षिणे कर्णेव्याहरत् नम इति पश्चात् वेङ्कटेशायेत्युपा[illegible] ॐइत्येकाक्षरं नम इति द्वे अक्षरे वेङ्कटेशायेति पंचाक्षराणि एतद्वेङ्कटेशस्याष्टाक्षरं पदमध्यो[illegible] ङ्कटेशस्याष्टाक्षरं पदमध्येति अनुपद्रवः सर्वमायुरेति विंदते प्राजापत्यं रायस्पोषंगौपत्यं[illegible] मश्नुतइति। प्रत्यगानंदं ब्रह्मपुरुषं प्रणवस्वरूपम् अकार-उकार-मकार-इति। तदे[illegible]

मिति–यमुक्त्वा मुच्यते योगी जन्मसंसारबंधनात्॥ॐनमोवेङ्कटेशायेत्यष्टाक्षरमूलमंत्रोपासकः श्री
ङ्कटेशसकृद्दर्शनपरः श्रीवैकुंठभवनमेकास्मिन्नेव जन्मनिगमिष्यति। तदिदं पुरुषं पुंडरीकं विज्ञान
तस्मात्तटिदाभमात्रो ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनइति सर्वभूतस्थमेकं वै वेङ्कटेशं का
पुरुषमकारणं परं ब्रह्म ॐकारेण सहितं भवत्योमित्येतदक्षरमिदं सर्वमित्याद्येतदथर्वणशिखावेङ्कटे
त्रवैभवं योऽधीते स सर्वमहापातकोपपातकात्प्रमुच्यते। तस्य श्रीवेङ्कटेशस्य नारायणस्य स
ज्यमाप्नोति। यएवं वेदेत्युपनिषत्॥१॥ अथाहाष्टाक्षरं वै वेङ्कटेशं ध्यायञ्जपंस्तन्महिम्ना मंत्रराज
नुष्टुभं वेङ्कटेशमपश्यत्। तेन च वै सर्वमिदमसृजदष्टाक्षरेण यदिदं किंच। ततएवाष्टाक्षरेण वा इमा
भूतानि जायंते अष्टाक्षरेणैव जातानि जीवंति अष्टाक्षरं प्रयंत्यभिसंविशंतीति।तेनैव सर्वावाचोपि संपद्
तस्मात्सर्वात्मकमष्टाक्षरं य एवं वेद स सर्वात्मवान् भवति॥२॥ अथाह श्रीमन्नारायणाष्टाक्षरं ब्रह्
समुपदिश्य तन्महिम्ना प्रपंचं तन्मुखाद्विरचय्य तदनुजिघृक्षुः पुनः कदाचिदागत्य ब्रह्मन् वत्स
प्रपन्नोसि रहस्यद्वयं न गृहीत्वा भगवानसीति तदानिर्गर्वितः पुत्रः प्रणिपातादिकुर्वन्ननुशाधि मामि
ततो मूर्धानमभिमृश्य शृणु वत्स महाचक्रविधानमिदं ब्रह्माहोमिति। अथाह नारायणः इदं सार्व
मिकं मोक्षद्वारं यद्योगिनउपदिशंति षडारंवा एतत्सुदर्शनं महाचक्रं तस्मात्सहस्रारं हुंफडितिषड
भवति षट्कोणं चक्रं भवति। षड् वा ऋतवः ऋतुभिः संमितं भवति। मध्ये नाभिर्भवति। वृत्ताका
नाभ्यां वा एते अराः प्रतिष्ठिताः मायया वेष्टितवद्भवंति। अतएव माययात्मानं स्पृशति। तन्मध्ये
ॐ नमोवेंकटेशाय ग्लैमितिलेखनं भवति। अथाष्टारमष्टपत्रं चक्रं भवति। तन्मध्ये श्रीं वेङ्कटे
य नमः ॐ नमोनारायणाय ॐ नमः श्रीवेंकटेशाय ॐ नमो वेंकटेशायेति मालाष्टाक्षरो मंत्रःप्र
नतया लेख्यो भवति। अष्टाक्षरा वै गायत्री। गायत्र्या संमितं भवति। बहिर्मायया वृत्ताकारेण
ष्टितं भवति। क्षेत्रं क्षेत्रं वै मायया संपद्यते। अथ द्वादशारं द्वादशपत्रं चक्रं भवति। तन्मध्ये श्रीं
शाय वेङ्कटेशाय नमःॐनमो भगवते वासुदेवायेति च लेख्यो भवति। द्वादशाक्षरा वैजगती। जग
ंमितं भवति। बहिर्मायया वृत्ताकारेण वेष्टितं भवति। स्थूलदेहं मायया स्पृशति।अथ षोडशा
ोडशपत्रं चक्रं भवति। तत्र कादिस्वरा लेख्या भवंति। क्रमात्पुनः कादयः षोडशकला वैपुरु
रुषएवेदं सर्वं पुरुषेण सम्मितं भवति। बहिर्मायया वृत्ताकारेण वेष्टितं भवति। सूक्ष्मदेहं माय
ृशति। अथ चतुर्विंशत्यरं चतुर्विंशतिपत्रं भवति। श्रीवेङ्कटेशाय परमात्मने नमोमहाभीष्टकाम
च्छ भवति।तद्दलेषु मालामंत्रो लेख्यो भवति।चतुर्विंशतिमूर्तयः ताभिस्संमिता भवंति।बहिर्माय
रेण वेष्टितं भवति। कारणदेहं मायया स्पृशति। अथ द्वात्रिंशत्पत्रं भवति। तद्दलेषुनमःश्रीवें
द्धज्ञानस्वरूपिणे-वासुदेवाय शांताय श्रीनिवासाय मंगलमिति लेखनीयं भवति। द्वात्रिंश
प्। अनुष्टुभा संम्मितं भवति।अष्टोत्तरनवतिभिर्वा एतत्सर्वतः संक्रामति। छंदांसिवै पत्रा
रं भूपुरत्रयेण वेष्टितं भवति। द्वारेषु मुखे क्षंक्षेत्रपालाय नमः इति पृष्ठे तं तण्डुभैरवाय न

इति दक्षिणे दुं दुर्गायैनम इति वामतो गं गणपतये नम इति द्वारदेवतास्थापनं भवति। तद्वाव एत च्छ्रीवेंकटेश्वरं महाचक्रं सार्वकामिकं मोक्षद्वारमृङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवति। तस्य पुरस्ताद्वसव आसते। रुद्रा दक्षिणतः आदित्याः पश्चाद्विश्वेदेवा उत्तरतो ब्रह्माविष्णुमहेश्वरा नाभ्यां सूर्याचंद्रमसौ पार्श्वयोः। तदेतदृचाभ्युक्तमृचो अक्षरे परमे व्योमन्। यस्मिन्देवा अधिविश्वे निषेदुः। यस्तं न वेद किमृचा करिष्यति। य इत्तद्विदुस्तइमे समासत इति। तदेतच्छ्रीवेङ्कटेश्वरं महा चक्रं बालोवा युवा वा वेद समहान् भवति। अष्टाक्षरेण होमं कुर्यादष्टाक्षरेणार्चनंतदेतद्रक्षोघ्नं मृत्यु तारकं गुरुणा लब्धं कंठे बाहौ शिखायां वा बध्नीत। सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते। त स्माच्छ्रद्धया यांकांचिद्गांदद्यात्सादक्षिणा भवति। अथाहनारायणः कृतकृत्यमात्मानं मन्यमानं वत्स ब्रह्मन् रहस्यं त्वंय्यन्तर्भूतं तृतीयंतत्रवेत्सि तदुहतमुपदेक्ष्यामि यदनुपदेक्ष्यनैतद्विद्यायाः पूर्ति र्भवति। जन्मकोट्यापिदेवो न प्रसीदति। न यज्ञदानमात्रेणसर्वपूर्तिर्भवति। ततः खेचरीं मुद्रां तेहं दास्यामि। देयं राज्यं देयं शिरो न विचार्यैषामुद्राखेचरी देया भवति। खेचरीमुद्रायां सद्यःप्रकाशकं परिभासते। अभ्यासात्पवनमनःक्षयमूलाद्देवस्य प्रत्यक्षं भवति। देहांते निस्संशयेन देवोपरोक्षो भवति। ऋजुकायस्सिद्धासनोधोमुखमुन्नमय्य नासाग्रे षण्मुखीमुद्रया तेजः पश्येत्। कुलं पवित्रं तस्य कृतार्थो जननी पुण्यवती विश्वं भारतेन॥ तस्मान्नित्यमेककालं द्विकालं त्रिकालं वा खेच रीमभ्यसेत्॥ शुचिः पूतः कर्मणो ब्राह्मणः कृतकृत्य इह भुक्त्वाभोगान् अंते सायुज्यं गच्छतीत्युप निषत्॥ २॥ अथ कैर्मंत्रैः स्तुतो देवः प्रीतो भवति। येन प्रत्यहं श्रोत्रेण खेचर्यादिरहस्यत्रयानु संधानेन विना वैकल्यसिद्धिर्भवति तं तेवदामीति नारायणःब्रह्माहोमिति। ॐयो हवै श्रीवेङ्कटेश्वरो देवो भगवान् भूर्भुवस्सुवरेतस्मै वैनमो नमः॥ ॐयो हवै श्रीवेंकटेश्वरो देवो भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः॥ यश्च विष्णुः यश्च महेश्वरःयश्च पुरुषः यश्चेश्वरः या सरस्वती या श्रीर्या गौरी या प्रकृतिर्या विद्या यश्चोंकारः यश्चतस्यार्धमात्रा वेदास्सांगाः सशाखाःयेपंचाग्नयः यास्सप्तव्याहृतयः येचाष्टौ लोक पालाः येचाष्टौ वसवः येच रुद्राः येचादित्याः ये चाष्टौ ग्रहाः यानिच पंचमहाभूतानि यश्च कालः यश्च मनुः यश्च मृत्युः यश्च यमः यश्चांतको यश्च प्राणः यश्चसूर्यः यश्च सोमः यश्च विराट् यश्च जीवः यश्च सर्वं तस्मै वै नमो नमः॥ एतैर्वा मंत्रैः देवं स्तुहि॥ ततो देवः प्रीतो भवति॥ स्वात्मानं दर्श यत्यंते खेचरीप्रकाशके चक्रराजे। तस्मादेतैर्मंत्रैः नित्यं देवं स्तुत्वा देवं पश्यति सोऽमृतत्वं गच्छति खेचरीप्रकाशश्च सर्वपूर्तिश्च सिध्यति। यएवं वेदेति महोपनिषत्॥३॥नारायणो ब्रह्माणमुपदिदेश र त्रयानुसंधानस्य फलमाकर्णयेति। एतद्रहस्यत्रयमेककालं वा नित्यमनुसंधत्ते सोऽग्निपूतो स आदित्यपूतो भवति। स सोमःससत्यं स विष्णुः स रुद्रः स देवः ससर्वम्। स मृत्युपूतो स सर्वपाप्मानं तरति। स भ्रूणहत्यां तरति। स वीरहत्यां तरति। स सर्वं तरति। यएतं मंत्रराज सोग्निस्तंभयति। स वायुं स्तंभयति। स आदित्यं स्तंभयति। स सोमं स उदकं स सर्वान्

विषं स्तंभयति। यएतं मंत्रराजं नित्यमधीते देवानाकर्षयति। स यक्षान् स नागान् । स सर्वानाकर्षयति। य एवं मंत्रराजं नित्यमधीते स भूर्लोकंजयति । स भुवः स सुवः स महः स जनः स तपः । स सर्वलोकाञ्जयति । य एतं मंत्रराजं नित्यमधीते सोऽग्निष्टोमेन यजते । सउक्थेन स षोडशिना स वाजपेयेन सोऽतिरात्रेण स आप्तोर्यामेन । स सर्वैः क्रतुभिर्यजत । य एतं मंत्रराजं नित्यमधीते स ऋचोधीते सयजूंषि स सामानि सोथर्वणं सोंगिरसः स शाखाः स पुराणानि सकल्पान् स गाथाः स नाराशँसीःस प्रणवम्।ससर्वमधीते। अनुपनीतशतमेकमेकेनोपनीतेन तत्सममुपनीतशतं गृहस्थेन रुद्रसूक्तजापकेन पुरुषसूक्तजापकेन अथर्वणशिरोजापकेन तापनीयोपनिषज्जापकेन मंत्रराजजापकेन । तद्वाएतत्परमं धाम मंत्रराजाध्यापकस्य चक्रपूजकस्य च खेचरीमुद्राप्रकाशकस्य । यत्र न सूर्यस्तपति यत्र न वायुर्वाति यत्र न चन्द्रमा भाति यत्रनक्षत्राणि भांति यत्र नाग्निर्दहति यत्र न मृत्युःप्रविशति यत्र न दुःखं सदानंदं परमानंदं शांतं शाश्वतं सदाशिवं ब्रह्मादिवंदितं योगिध्येयं परमपदं वेङ्कटेशाख्यं वैष्णवं यद्गत्वान निवर्तंते योगिनः॥ तदेतदृचाभ्युक्तं तद्विष्णोःपरमं पदं...विष्णोर्यत्परमंपदम् । न तत्रसूर्यो भाति न चंद्रतारकं नेमाविद्युतो भांति कुतोयमग्निः ॥ तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । तदेतन्निष्कामंभवतीत्युत्तरतापिन्युपनिषत् ॥ ॐ भद्रंकर्णेभिः...शांतिः शांतिः शांतिः ॥ हरिः ॐ ॥ इति श्रीवेङ्कटेशतापिन्यु पनिषत्समाप्ता ॥ श्रीनिवासाय मंगलम् ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ श्रीरस्तु ॥ ॥ छ ॥



पुस्तक मिलनेका पता–खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्रालय खेतवाड़ी–मुंबई.